अथ द्वितीयः—उदितोदितो राट् भार्या श्रीकान्ता । तयैकदा वादे परिव्राजिका जिता । तया तस्याः पट्टे रूपं लिखित्वा वाणारसीराज्ञे दर्शितं, तेन धर्म्मरुचिनामराज्ञा दुतमुखेन सा मार्गिता । ततःससैन्यः समेतः । उदितोदितेन जनक्षयो मा भूदिति कायोत्सर्गः कृतः । धनदेन ससैन्यो वाणारस्यां मुक्तः । अथ तृतीयः—चम्पायां सुदर्शनः श्रेष्ठिसुतोऽष्टमीचतुर्दश्यादिषु चत्वरे उपासकप्रतिमां प्रपद्यते । राजपत्न्या प्रार्थ्यमानोऽप्यनिच्छन्नन्यदोत्सर्गस्थो देव इति कृत्वा वस्त्राच्छादितोऽन्तःपुरं नीतो राज्ञ्या निर्बन्धादभ्यर्थितेऽनिच्छन् राज्ञीकृतकलकले राज्ञा वध्यत्वे आज्ञप्तो नीयमानः प्रियया मित्रवत्या श्राद्धिकया श्रुत्वा सर्वानुभूतियक्षाराधनाय कायोत्सर्गस्थितया स्कन्धेऽसौ वाहितो सर्वानुभूतियक्षेण पुष्पदाम्नि कृतोऽर्चितो मित्रवत्या कायोत्सर्गोऽपारि ३ । सोदासो यथा नमस्कारे ४ । अथ पञ्चमो दृष्टान्तः—कोऽपि विराधितदीक्षः खड्गजीव उत्पन्नः, पथि जनान् हन्ति । साधून् गच्छतो दृष्ट्वा यातः, साधवः कायोत्सर्गेऽस्थुः । ततोऽशक्तः शान्तोऽभूत् ॥ १५४५॥ कायोत्सर्गे कथं कर्म्मक्षयः ? इत्यत्र भाष्यं ' जह '

**जह करगओ, निकिंतइ, दारुं इंतो पुणोवि वच्चंतो । इअ कंतंति सुविहिआ, काउस्सग्गेण कम्माइं ॥२४०॥**

यथा करपत्रं यात् आयाद्वा पुनः काष्टानि निकृन्तति, एवं सुविहिताः साधवः कायोत्सर्गेण कर्माणि कृन्तन्ति ॥२४०॥ 'काउ'

**काउस्सग्गे जह, सुट्ठियस्स भज्जंति अंगमंगाइं । इय भिंदंति सुविहिया, अट्ठविहं कम्मसंघायं ॥१५४६॥**

कायोत्सर्गे सुस्थितस्य यथाङ्गोपाङ्गानि भज्यन्ते, एवं मुनिवराश्चित्तरोधादष्टविधं कर्म्मसंघातं भिंदन्ति । ननु देहक्लेशदः कायोत्सर्गः कथं क्रियते ? उच्यते ॥ १५४६ ॥ ' अन्नं '

अन्नं इमं शरीरं, अन्नो जीवुत्ति एव कयबुद्धी। दुक्खपरिकिलेसकरं, छिंद ममत्तं सरीराओ ॥१५४७॥

अन्यदिदं शरीरं अशाश्वतं, अन्यो जीवः शाश्वतो कर्म्मभोक्ता य इदं त्यजति, इत्येवं कृतबुद्धिः सन् रे जीव! दुःखं असुखं परिक्लेश आयासस्तयोः करं शरीरान्ममत्वं छिन्द्धि तथा चैवं ध्यायेत् ॥ १५४७ ॥ 'जाव'

जावइया किर दुक्खा, संसारे जे मया समणुभूया। इत्तो दुविसहतरा, नरएसु अणोवमा दुक्खा ॥१५४८॥

यावन्ति दुःखानि किल मया संसारेऽशेषगतिरूपे समनुभूतानि, ततस्तेभ्योऽपि दुर्विषहतराणि असह्यानि नरकेष्वनुपमानि उपमारहितानि दुःखानि सोढानि ॥ १५४८ ॥ 'तम्हा'

तम्हा उ निम्ममेणं, मुणिणा उवलद्धसुत्तसारेणं। काउस्सग्गो उग्गो, कम्मक्खयट्ठाय कायव्वो ॥१५४९॥

तस्मान्मुनिना उपलब्धसूत्रसारेण ज्ञातसूत्रार्थेन निर्ममेन उग्रः शुभाध्यवसाय कर्म्मक्षयाय न तु स्वर्गाद्यर्थं कायोत्सर्गः कार्यः। उक्तोऽनुगमो नयाः प्राग्वत् ॥ १५४९ ॥ इति कायोत्सर्गाध्ययनं।

इति श्रीमन्माणेक्यशेखरसूरिविहितदीपिकायुतं श्रीआवश्यकसूत्रगतं पंचमं कायोत्सर्गाध्ययनं संपूर्णतामगमत्

द्वितीयो विभागः।

आचार्य-श्री-विजयदानसूरीश्वरजी-जैन-ग्रन्थमाला

 सुरत 